# ॥ अक्रूरकृत विष्णु स्तोत्रं ॥

**श्रीअक्रूर उवाच**

नतोऽस्म्यहं त्वाखिलहेतुहेतुं
नारायणं पूरुषमाद्यमव्ययं ।
यन्नाभिजातादरविंदकोषा-
द्ब्रह्माविरासीद्यत एष लोकः ॥ १ ॥

भूस्तोयमग्निः पवनं खमादि-
र्महानजादिर्मन इंद्रियाणि ।
सर्वेंद्रियार्था विबुधाश्च सर्वे
ये हेतवस्ते जगतोऽंगभूताः ॥ २ ॥

नैते स्वरूपं विदुरात्मनस्ते
ह्यजादयोऽनात्मतया गृहीतः ।
अजोऽनुबद्धः स गुणैरजाया
गुणात्परं वेद न ते स्वरूपं ॥ ३ ॥

त्वां योगिनो यजंत्यद्धा
महापुरुषमीश्वरं ।
साध्यात्मं साधिभूतं च
साधिदैवं च साधवः ॥ ४ ॥

त्रय्या च विद्यया केचित्त्वां
वै वैतानिका द्विजाः ।
यजंते विततैर्यज्ञैर्ना-
नारूपामराख्यया ॥ ५ ॥

एके त्वाखिलकर्माणि सन्न्यस्योपशमं गताः ।
ज्ञानिनो ज्ञानयज्ञेन यजंति ज्ञानविग्रहं ॥ ६ ॥

अन्ये च संस्कृतात्मानो विधिनाभिहितेन ते ।
यजंति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्तिकं ॥ ७ ॥

त्वामेवान्ये शिवोक्तेन मार्गेण शिवरूपिणं ।
बह्वाचार्यविभेदेन भगवंतर्नुपासते ॥ ८ ॥

सर्व एव यजंति त्वां सर्वदेवमयेश्वरं ।
येऽप्यन्यदेवताभक्ता यद्यप्यन्यधियः प्रभो ॥ ९ ॥

यथाद्रिप्रभवा नद्यः पर्जन्यापूरिताः प्रभो ।
विशंति सर्वतः सिंधुं तद्वत्त्वां गतयोऽन्ततः ॥ १० ॥

सत्त्वं रजस्तम इति भवतः प्रकृतेर्गुणाः ।
तेषु हि प्राकृताः प्रोता आब्रह्मस्थावरादयः ॥ ११ ॥

तुभ्यं नमस्ते त्वविषक्तदृष्टये
सर्वात्मने सर्वधियां च साक्षिणे ।
गुणप्रवाहोऽयमविद्यया कृतः
प्रवर्तते देवनृतिर्यगात्मसु ॥ १२ ॥

अग्निर्मुखं तेऽवनिरंघ्रिरीक्षणं
सूर्यो नभो नाभिरथो दिशः श्रुतिः ।
द्यौः कं सुरेंद्रास्तव बाहवोऽर्णवाः
कुक्षिर्मरुत्प्राणबलं प्रकल्पितं ॥ १३ ॥

रोमाणि वृक्षौषधयः शिरोरुहा
मेघाः परस्यास्थिनखानि तेऽद्रयः ।
निमेषणं रात्र्यहनी प्रजापतिर्
मेढ्रस्तु वृष्टिस्तव वीर्यमिष्यते ॥ १४ ॥

त्वय्यव्ययात्मंपुरुषे प्रकल्पिता
लोकाः सपाला बहुजीवसंकुलाः ।
यथा जले संजिहते जलौकसोऽ–

प्युदुंबरे वा मशका मनोमये ॥ १५ ॥

यानि यानीह रूपाणि क्रीडनार्थं बिभर्षि हि ।
तैरामृष्टशुचो लोका मुदा गायंति ते यशः ॥ १६ ॥

**॥ दशावतारस्तुतिः ॥**

नमः कारणमत्स्याय प्रलयाब्धिचराय च ।
हयशीर्ष्णे नमस्तुभ्यं मधुकैटभमृत्यवे ॥ १७ ॥

अकूपाराय बृहते नमो मंदरधारिणे ।
क्षित्युद्धारविहाराय नमः शूकरमूर्तये ॥ १८ ॥

नमस्तेऽद्भुतसिंहाय साधुलोकभयापह ।
वामनाय नमस्तुभ्यं क्रांतत्रिभुवनाय च ॥ १९ ॥

नमो भृगुणां पतये दृप्तक्षत्रवनच्छिदे ।
नमस्ते रघुवर्याय रावणांतकराय च ॥ २० ॥

नमस्ते वासुदेवाय नमः संकर्षणाय च ।
प्रद्युम्नायानिरुद्धाय सात्वतां पतये नमः ॥ २१ ॥

नमो बुद्धाय शुद्धाय दैत्यदानवमोहिने ।
म्लेच्छप्रायक्षत्रहंत्रे नमस्ते कल्किरूपिणे ॥ २२ ॥

**॥ दशावतारस्तुतिः संपूर्णः ॥**

भगवन् जीवलोकोऽयं मोहितस्तव मायया ।
अहं ममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु ॥ २३ ॥

अहं चात्मात्मजागार दारार्थस्वजनादिषु ।
भ्रमामि स्वप्नकल्पेषु मूढः सत्यधिया विभो ॥ २४ ॥

अनित्यानात्मदुःखेषु विपर्ययमतिर्ह्यहं ।
द्वंद्वारामस्तमोविष्टो न जाने त्वात्मनः प्रियं ॥ २५ ॥

यथाबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ।
अभ्येति मृगतृष्णां वै तद्वत्त्वाहं परां मुखः ॥ २६ ॥

नोत्सहेऽहं कृपणधीः कामकर्महतं मनः ।
रोद्धुं प्रमाथिभिश्चाक्षैर्ह्रियमाणमितस्ततः ॥ २७ ॥

सोऽहं तवांघ्र्युपगतोऽस्म्यसतां दुरापं
तच्चाप्यहं भवदनुग्रह ईश मन्ये ।
पुंसो भवेद्यर्हि संसरणापवर्गस्
त्वय्यब्जनाभ सदुपासनया मतिः स्यात् ॥ २८ ॥

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ।
पुरुषेशप्रधानाय ब्रह्मणेऽनंतशक्तये ॥ २९ ॥

नमस्ते वासुदेवाय सर्वभूतक्षयाय च
हृषीकेश नमस्तुभ्यं प्रपन्नं पाहि मां प्रभो ॥ ३० ॥

॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे चत्वारिंशत्तमेऽध्याये श्री अक्रूरकृत विष्णुस्तोत्रं संपूर्णं ॥